प्रवृत्तमाश्रित्येच्छाविकल्प उक्त इदानीं व्यवस्थितशास्त्रमाश्रित्योच्यते । व्यवस्था व्रीह्याग्रयणेनेष्ट्वा यावद्यवाग्रयणेष्टिर्मीयते तावत्पर्यन्तं दर्शपूर्णमासौ व्रीहिभिरेव कार्यौ । विकृतावनियमो दर्शपूर्णमासावित्येव भरद्वाजादिभिरभिधानात् । एवं यवाग्रयणेऽपि । आयवेभ्यः पक्वेभ्यः पूर्वं मर्यादार्थ आह् । यदा यवाग्रयणक्रिया तदैवायं. पक्षोऽन्येषां तु स्वेच्छापक्ष एव । यवाग्रयणे कृतेऽपि स्वेच्छया यागे श्रुतिरापस्तम्बेन दर्शिताऽपि या व्रीहिभिरेवोभयत्र ते ह वै सुयवस्तमा भवन्तीति बह्वृचब्राह्मणमिति । सुखेनोपचारार्हा वितुषीभावादि सुखसाध्यमित्यर्थः ।

वेणुयवानां[1] श्यामाकमेके समामनन्ति ।

वेणूनां पाकेन यवसदृशं धान्यं वेणुयवास्तेषामग्रपाके सतीत्यध्याहारस्तदा श्यामाकेष्टिमेके शाखिनः पठन्ति । श्यामाकान्यकान्यापायित्वं यदा वेणुयवपाकस्तदैव श्यामाकेष्टिरारण्यकभक्षणाधिकारार्था । तदुक्तं कात्यायनेन—'श्यामाकं चाऽऽरण्यस्याग्रपाके' इति । एते श्यामाका आरण्यका एवाथवा वेणुयवानामग्रपाकस्याऽऽग्रयणमित्यध्याहारो वेणुयवानामाग्रयणं श्यामाकं श्यामाकवन्मासमग्निहोत्रमितिवत् । तदुक्तं वैखानसेन—प्रियङ्गुवेणुयवानां यववत् श्यामाकवदिति । तथा च चरोः सोम एव देवतेति नियमः । आपस्तम्बेन प्रजापत्यादिनानादेवता विकल्प उक्तः । अथ वा वेणुयवानामेव श्यामाकशब्दाभिधेयानां चरुमेके । यवहाधिकरणे हि यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्तीति वाक्यशेषाद्यवशब्देन दीर्घशूका एव गृह्यन्ते न श्यामाका यवशब्देन व्यवह्रियमाणा अपि । तत्तु ग्राम्ययवेष्वेव निर्णायकं नत्वारण्यकवेणुयवेषु । तस्मात्त एव श्यामाकशब्दवाच्यास्तेषामेव चरुरिति फलमनन्तरपक्षसमानमेव ।

अपि वा नाऽऽग्रयणेष्टिं कुर्वीत नवै-
रेवामावास्यायां पौर्णमास्यां वा यजेत ।

अपि वा नवैरेवामावास्यायां पौर्णमास्यां वा यजेतेति लाघवेन वक्तव्ये न कुर्वीतेति प्रतिषेधः प्रासेष्टिविकल्पार्थ उत्तरत्र वक्ष्यमाण पक्षः प्रासेष्टेरपि समानविकल्पार्था नवैर्वाऽग्निहोत्रं जुहुयादित्यादिकास्ततस्त्वप्रारब्धदर्शपूर्णमासस्येदं विधानमित्याहुस्तन्निरस्तं नित्येष्टिमेवान्यतरस्मिन्पर्वणि नवैः कुर्यात्तावतैवाऽऽग्रयणं कृतमित्यर्थः । आपस्तम्बेन समानतन्त्राऽप्युक्ता साऽपि दर्शपूर्णमासयोर्विकृतेश्च संनिपात इत्यत्रैव व्याख्याता । तत्राऽऽग्नेयो न क्रियते पृथक्पुराणैर्व्रीहिभिर्नित्याग्नेय एव कर्तव्यस्तथा चैन्द्राग्नादीनेव चतुरो नवैर्व्रीहिभिः श्यामाकैर्यवैर्वा निरुप्य नित्यं हविर्नवैः पुराणैर्वा निर्वपेत् । नानातन्त्रे श्यामाके तु तां निरुप्य नित्येष्टिं निर्वपेत् । श्यामाकमन्यदा भिन्नतन्त्रं वा समानतन्त्रं नित्येन वा हविषा तदा तमेकमेव निरुप्य नित्यह-

---

१ क. ग. घ. ठ. ड. ण. °कें । पंदहा° ।

विर्निर्वपेत् । आग्रयणेष्टावाग्नेयः कृताकृत एवाऽऽपस्तम्बभरद्वाजादिभिरङ्गीकृतः । अनुमतश्चास्मदाचार्येणापि यदयं वक्ष्यत्याग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वेति तथा सोमेन सह चतस्र एवाऽऽग्रयणदेवता इति ।

नवैर्वाऽग्निहोत्रं जुहुयादग्निहोत्रीं वा नवानादयित्वा तस्याः क्षीरेण जुहुयाच्चतुःशरावमोदनं वा पक्त्वाऽऽग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वा तमक्तं भोजयति भोजयति॥२१॥

इति सत्याषाढहिरण्यकेशिसूत्रे तृतीयप्रश्नेऽष्टमः पटलः ॥ ८ ॥

---

इति हिरण्यकेशिसूत्रे तृतीयः प्रश्नः ॥ ३ ॥

---

एतेऽनुकल्पा अप्रारब्धदर्शपूर्णमासस्याऽऽग्रयणकाल आगते नियता एवान्यस्याशक्तावेव नवैस्तण्डुलैरेव व्रीहीणां यवानां वा सायंप्रातस्तथैवोक्तमापस्तम्बादिभिरेकापूर्वसाधनत्वं न तथैव सिध्यतीति नोक्तमाचार्येण क्षीरहोमिणस्त्वग्निहोत्रीं गां व्रीहीन्श्यामाकान्यवान्वा भक्षयित्वा तस्यै भक्षणार्थं दत्त्वा तत्परिणामे सति सायं प्रातस्तस्याः पयसा जुहुयात्प्रातरग्निहोत्रस्यैतौ पक्षौ यदा दर्शपूर्णमासावनारम्भौ स्यातामाग्रयणकाल उपस्थिते नियतावेवान्यस्यप्याशक्तौ प्राप्तप्रतिषेधबलादित्युक्तमेव । चतुःशरावस्तु व्याख्यात आधाने तस्य पाको गार्हपत्य इत्यापस्तम्ब औपासनेऽपि वेति वैखानसः । होमो वा भोजनं वेति विकल्पेनान्यैरुक्तमाचार्यस्तु हुत्वा तस्यावशिष्टमोदनं कृत्वाऽन्यैर्व्यञ्जनैश्च ब्राह्मणान्यथाशक्ति भोजयेत् । अयं पक्षस्तु पवमानहविषामुत्कर्षे नियतोऽन्यस्याशक्तौ । अग्निहोत्रहोमपक्षयोर्न पर्वनियमश्चतुःशरावस्य चाऽऽग्रयणदेवताभ्य आग्रयणेष्टिप्रत्याम्नायस्य पर्वनियमः । द्विरुक्तिः प्रश्नसमाप्त्यर्था । अत्र कात्यायनेन विशेषा उक्ताः—नवाशितायाः पयसाऽग्निहोत्रमित्यभिधाय दीक्षितव्रतं चोपसत्सु रौहिणौ सुत्यासु सवनीया इति । तत्राग्निनाधायाकृताग्रयणो वसन्ते दीक्षिताऽऽग्रयणकालातिपत्तौ प्राप्तायामिदमुक्तं शरदि वाऽनीजान आग्रयणेन वाजपेयाय दीक्षित तदाप्येवमाग्रयणसंपत्तिः कार्या ॥

इति श्रीहिरण्यकेशिसूत्रव्याख्यायां महादेवकृतायां प्रयोगवैजयन्त्यां तृतीयाधानप्रश्नेऽष्टमः पटलः ॥ ८ ॥

॥ प्रश्नश्च समाप्तः ॥

इति हिरण्यकेशिसूत्रव्याख्यायां तृतीयः प्रश्नः ॥ ३ ॥

---

१ घ. ङ. ज. झ. ञ. ढ. 'नं प'।